पीलूकादशमूली च च्छिन्नारुबुकपाटली ।
रास्नाशिरीषखदिरकपिगच्छूतपस्विनि ।। 4 ।।

सहचर्या च दुत्तूरताळसङ्ख्यासमूलकम् ।
प्रसारणी पञ्चदशं फलमात्रं तु योजयेत् ।। 5 ।।

सर्वेषां तुलमादाय षोडशाढकमम्भसि ।
चतुर्भागावशेषन्तु क्वथितं दिनसप्तकम् ।। 6 ।।

दधिमुस्ताढकं दद्यात् द्विगुणं चाम्लकाञ्जिकम् ।
अर्कक्षीरं स्नुहिक्षीरं प्रत्येकं प्रस्थमात्रकम् ।। 7 ।।

कुळुत्थपीयूषद्विप्रस्थाचोऽजक्षीरं च प्रस्थकम् ।
तैलाढकं प्रयोक्तव्यं पचे शुभदिनं भिषक् ।। 8 ।।

कल्कं तु योजयेत्सर्वं गवाक्षीरेण पेषयेत् ।
मदनं चित्रमूलं च अश्वगन्धपुनर्नवि ।। 9 ।।

भूपीलुका च निर्गुण्डि व्याघ्रियुग्मा च कर्करी
वासादस्पर्शममरी जीवन्ती कण्टकारिका ।
मूर्वामृकामेघनादि बर्बर्याभिद्रमुस्तकं
इन्द्रवारुणिका शिग्रुरर्कगळ्यासमूलकम् ।। 10 ।।

क्षारद्वयं त्रिकटुकं यष्टिमधुकपद्मकम् ।
चातुर्जातं जायिफलं चन्दनं मांसिलूषितम् ।। 11 ।।

हीयावळिरालिनखं सरळागरुगुग्गुलु ।
गजपिप्पलिकर्कोलश्यामालवणपञ्चकम् ।। 12 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

पलाशगन्धं भृग्वञ्च मुरुढं च समाक्षिकम् ।
हिङ्गुळं गन्धकं ताळं सिन्धूरं वत्सनाभिकम् ।। 13 ।।
मनःशिलाविषं तुत्थमयस्कान्तं च कान्तकम् ।
भार्गी निशाद्वयं कुष्ठं रास्नातगरचोरकम् ।। 14 ।।
शतपुष्पं देवदारु शारिबे द्वे वचात्रिवृत् ।
ग्रन्थिकं कटुरोहिण्या मञ्जिष्ठोशीरवत्सकम् ।। 15 ।।
त्रिफलं सर्षपं निम्बं दीप्यं लशुनचव्यकम् ।
जीरके द्वे विळङ्गं च इङ्गुभल्लातकित्रिभिः ।। 16 ।।
सर्वेषां कल्कमादाय षण्णवत्यौषधं भिषक् ।
प्रत्येकं तु त्रिगद्याणं फलमष्टदशं भवेत् ।। 17 ।।
समुहूर्ते सुनक्षत्रे सप्तवारं पचेत् शुभम् ।
रसभस्मफलार्धं च दत्वा तैलं च योजयेत् ।। 18 ।।
अशिपतिं वातरोगं च अन्तर्वृद्धिहरं परम् ।
अङ्गवातं कम्पवातं धनुर्वातं च नाशयेत् ।। 19 ।।
गजानामश्वभग्नानां वातानां च नृणामपि ।
गरुडानिव दृष्टिस्यात्प्रकाशयति तक्षणम् ।। 20 ।।
पानवस्तौ च दातव्यं खरं वा जर्झरीकृतम् ।
दन्तरोगं शिरोरोगं सन्निवातात्रयोदश ।। 21 ।।
सर्वशूलं कर्णरोगं शेषोदरनिवर्तिका ।
वन्ध्या च लभते गर्भं षण्डोऽपि पुरुषायते ।। 22 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

अभ्यङ्गत्वग्गतं हन्ति निरुहं सर्वकामिकाम् ।
श्लेष्मिकाश्चैव विंशत्या चत्वारिंशत्तु पैत्तिकान् ।। 23 ।।
गृद्रसिं वातभग्नं च ज्वरमष्टविधं जयेत् ।
ये नरा नष्टशुक्लास्य ऋतुहीनश्च या स्त्रियः ।। 24 ।।
मूढवन्ध्यालभेद्गर्भं ऋतुस्नाता न संशयः ।
हन्त्यष्टदशकुष्टानि व्रणरोगान्विनाशयेत् ।। 25 ।।
आयुर्वृद्धिकरं चैवं तथा जनकपूजिता ।
नागरादिमहातैलं देहं चन्द्रप्रभाकरम् ।
कथितं व्याधिविध्वंसं पूज्यपादेन भाषितम् ।। 26 ।। **॥6॥**

## 7. ज्वरे सहदेवीतैलम्

सहदेवी च तर्कारि चार्कचिञ्चाररसाढकम् ।
तक्राढकं च तैलं च प्रस्थं च विपचेद्बुधः ।। 1 ।।
त्रिकटुः त्रिसुगन्धि च बला लाक्षा निशा वचा ।
यष्टिकटुकरोहिण्या शारिबे द्वे पुनर्नवा ।। 2 ।।
रास्ना सैन्धवकर्कोलजातीफलखचोरकम् ।
अमृतं चन्दनं सेव्यं मौर्विसर्षपनिम्बकम् ।। 3 ।।
अश्वगन्धिमेघनादि मुस्ता गन्धिकं चित्रकम् ।
कुष्ठं देवद्रुमं नाभिलोहितागरुकुङ्कुमम् ।। 4 ।।
द्राक्षारेणुकधान्याकगण्डीरं केसरं मिशि ।
पलागन्धा च मधु च प्रसारण्यास्तु मूलकम् ।। 5 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

ये कनिष्कप्रमाणं तु रालं षोडशनिष्ककम् ।
सर्वेषां पल चत्वारो विपचेत्तैलमात्रकम् ।। 6 ।।
एकद्वित्रिचतुर्थादि विषमज्वरनाशनम् ।
अभ्यङ्गमात्रको हन्याद्वातव्याधिविनाशनम् ।। 7 ।।
पाने वस्तौ च दातव्यं निरूहं सर्वकामिकाम् ।
दाहज्वरं सान्निपातं वातव्याधिविनाशनम् ।। 8 ।।
भूतज्वरं केशरोगान् बलवर्णाग्निवर्धनम् ।
सर्वव्याधिहरं शीघ्रं महातक्राख्यतैलकम् ।। 9 ।। ||7||

## 8. रास्नादितैलम्

रास्ना नागरकुष्ठचन्दननिशायष्टयाह्व कृष्णा
बला लाक्षा सैन्धवशारिबा मधुरसादेवद्रुलोहीतकैः ।
सोशीरम्बुधिफेनलोहितजलैः तैलं पचेत् षड्गुणि
तक्रे सिद्धमिदं ज्वरोष्ण सकलं शीतादिकान्नाशयेत् ।। 1 ।।
||8||

## 9. तक्रतैलम्

समुफेनलामज्ञा चन्दनं कुष्ठशारिबा ।
ह्रीवेरनागरं मूर्वा तगरं सैन्धवं विषा ।। 1 ।।
तैलस्य षड्गुणे तक्रे सर्वे हि मृदुवह्निनाम् ।
अङ्गदाहं शिरोदाहं शितिकं ज्वरनाशनम् ।। 2 ।। ||9||

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 10. इन्द्राणितैलम्

इन्द्राणि झरसि गौरिसिंहपर्णि च मर्कटी ।
सर्वेषां सरसं सितां तैलप्रस्थं कटुत्रयम् ।। 1 ।।
श्रृङ्गिभार्गिकणामूलं कुण्डली कण्टकारिका ।
त्रिफलातिबलारास्ना मञ्जिष्ठा जटिला वृषा ।। 2 ।।
पलाशगन्धं माक्षिकं भूनिम्बं वचरत्नकम् ।
आरग्वदं पुम्बिझेन्टि त्वग्निशामरिचैर्युतम् ।। 3 ।।
शङ्खपुष्पि शङ्खनिचपिशाचिनिम्बबीजकम् ।
लोहितं यष्टिलशुनं समभागानिदं पचेत् ।। 4 ।।
तैलं नश्ये च पाने च सन्निपातकुलान्तकम् ।
निर्गुण्ड्यार्ककरञ्जतापसि निशा तर्कारिकानां रसे ।। 5 ।।
गोऽजामूत्रयुते चतुर्गुणयुते प्रस्थं पचेत्तैलकम् ।
व्योषग्रन्थिकमुस्तुतिक्तरजनियष्ट्यांह्व सिन्धूत्थकम् ।। 6 ।।
श्रीखण्डं त्रिफला रसोनशरपुम्बिवासरास्नायुतम्
सिद्धार्थागुरुकुष्ठसर्षपशटिजीरद्वयं दीप्यकम् ।। 7 ।।
मञ्जिष्ठा हपुषाशतांह्व बृहति शिग्रुद्वयं केसरीबीजम् ।
पुन्नागनक्तां ह यमुनि बृहति निम्बजाकोजातं सारम् ।। 8 ।।
माधूकनिम्बं सकलपटुयुतं राल तीक्ष्णारयुक्तम् ।
तैलं सिद्धं सुपक्वं विधिविहितमहासन्निपातान्तकोऽयम् ।
नाम्ना श्रीपूज्यपादोदितमतिहितदं सिद्धयोगं प्रसिद्धम् ।। 9 ।।

||10||

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 11. धात्र्यादितैलम्

क्वाथे धात्रि गुळूच्योर्वि समधुक बला शारिबो शिरपदैः
काकोल्यादि त्रिजातागरुसरळवरा चोत्पलाम्बोवरीभिः ।
श्रेष्ठा कर्कोलजातितगरं चन्दनाब्देन्दु चोरै-
स्तै पक्वं सुदुग्धं शमयति नितरां रोगजालं शिरोष्टम् ।। 1 ।।

॥ 11 ॥

## 12. अङ्कोलादितैलम्

अङ्कोलत्रिफलकुलित्थरजनी गुञ्जास्तिकोठासनः
क्षीरत्वक्तरुवारिभद्रखदिरारिब्रह्मवृक्षार्जुनैः ।
पिष्ट्वारक्वथितैस्सचाद्रिचतुभिस्तैलं प्रसिद्धं भवेत्
पानाद्यैः परिदाहकुष्ठपटिकान् मेहान्निहन्यात्खलु ।। 1 ।।

॥ 12 ॥

## 13. क्षीरवृक्षादितैलम्

क्षीरद्रुमत्वक्स्वरसे रसो वा तथा निशायाः स्वरसे रसो वा ।
कल्ककृता तैलगुणं प्रसिद्धं तैलं च दाहं पिटकामयघ्नम् ।। 1 ।।

॥ 13 ॥

## 14. एरण्डतैलम्

एरण्डतैलं वृषणप्रवृद्धौ सगोष्पयस्कंपितमेतदुक्तम् ।
स राजवृक्षामृतवल्लिवासा क्वाथो हितामारुत शोणितेषु ।।
।। 1 ।।

॥ 14 ॥

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 15. त्रिकटुकादितैलम्

यत्नेन तैलपात्रेण तैलं हृत्वा कटुत्रिकम् ।
संयुक्तं पचनं कृत्वा मर्दनं सर्ववातनुत् ।। 1 ।। ||15||

## 16. एरण्डमूलादितैलम्

एरण्डमूलं तुलसिशतांह्वा
जीवन्तिरास्ना लवणोत्तमं च ।
भृङ्गशतांह्वा मधुयष्टिका च
विश्वौषधिं चेति समानि कुर्यात् ।। 1 ।।

एतैर्विपक्वं पयसा च तैलं
चतुर्गुणे भृङ्गरसे तथैव ।
षड्सिन्दुरो नासिकया प्रयुक्तान्
सर्वान्निहन्याञ्चिरजीविकं तान् ।। 2 ।।

च्युतांश्च केशान्पतकोहिदन्तान्निर्मूलां सदृढं करोति ।
सुवर्णनागप्रतिमञ्च चक्षुर्बाह्वोर्बलं चाप्यधिकं करोति ।। 3 ।।
||16||

## 17. मञ्जिष्ठादितैलम्

मञ्जिष्ठाञ्जनशारिबकटुकाकर्कोलजातीफलं
श्रीपर्णीत्रिफलाजटं तगररोग्यष्टिचातुर्जातकैः ।
सोशीरागरुचोचयुग्ममृगनाभिन्दूत्पलाम्भोबिभिस्तैलं
नेत्रशिरोर्तिहारी सपयसिद्धं कुमारी रसे ।। 1 ।। ||17||

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 18. लघुनारायणीतैलम्

बिल्वाग्निमन्थश्योनाकपाटलापारिभद्रकः ।
प्रसारण्यश्वगन्धा च बृहति कण्टकारिका ।। 1 ।।
बलाजातिबलामुस्ता स्वदंष्ट्रां च पुनर्नवा ।
येषां शतफलान् भागान् चतुर्द्रोणेऽम्भसि पचेत् ।। 2 ।।
पादशेषं परिश्राव्य तैलपात्रे निदापयेत् ।
शतपुष्पं देवदारुमांसिशैलियकं वचा ।। 3 ।।
चन्दनं तगरं कुष्ठमेलापर्णी चतुष्टयम् ।
रास्नातुरगगन्धा च सैन्धवं स पुनर्नवम् ।। 4 ।।
येषान्विषमितान् भागान् पेषयित्वा विनिक्षिपेत् ।
शतावरी रसं चैव तैलसाम्यं प्रदापयेत् ।। 5 ।।
अजं वायिधिवागव्य प्रत्येकं तु चतुर्गुणम् ।
पाने वस्तौ तदाभ्यङ्गे भोज्ये नश्ये प्रशस्यते ।। 6 ।।
अश्वो वा वातसम्भग्नो गजं वा यदि वानरः ।
पङ्गुलः पिटसर्पस्य तैलेनानेन सिद्ध्यति ।। 7 ।।
अधोभागे च ये वाताः शिरोमध्यगताश्रये ।
मन्यास्तम्भे गतस्तम्भे दन्तरोगे गलग्रहे ।। 8 ।।
बदिरागळजिंह्व च मन्दमेव स एव वा ।
अल्पप्रजा च या नारि या च गर्भं न विन्दति ।। 9 ।।
वातर्थि वृषणो येषां मन्त्रवृद्धिश्च दारुणः ।
यस्य तिष्ठति चैकाङ्गं गतिर्यस्य च विह्वलम् ।। 10 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

क्षीणेन्द्रियो नष्टशुक्लो ज्वरक्षीणस्य यो नरः ।
एतत्तैलं वरं तेषां नाम्ना नारायणं श्रुतम् ।। 11 ।। ||18||

## 19. पृथक् नारायणीतैलम्

शतावरीचांशुमतिप्रश्निपर्णिशटीबला ।
एरण्डस्य च मूलानि बृहत्यो पूतिकस्य च ।। 1 ।।
गवेदुकस्य मूलानि निकथासहचरस्य च ।
येषान् दशफलान्भागान् जलद्रोणे विपाचयेत् ।। 2 ।।
चतुर्भागावशेषन्तु कषायमवतारयेत् ।
पुनर्नवा वचा दारु शतांह्वा चन्दनागरु ।। 3 ।।
शैलेयं तगरं कुष्ठमेला मासि स्थिरा बला ।
अश्वगन्धिसिन्धुरास्ना फलार्धानि च पाचयेत् ।। 4 ।।
गव्याजपयसौ प्रस्थौ द्वौ द्वावत्र प्रदापयेत् ।
शतावरी रसं प्रस्थं तैलप्रस्थं विपाचयेत् ।। 5 ।।
अस्य तैलस्य सिद्धस्य श्रृणु वीर्यमतःपरम् ।
अश्वानां वातभग्नानां कुञ्जराणां नृणामपि ।। 6 ।।
तैलमेतत् प्रयोक्तव्यं सर्ववातनिवारणम् ।
आयुष्मांश्च नरे पीत्वा निश्चयेन दृढो भवेत् ।। 7 ।।
गर्भमत्वशरीं विन्ध्या किम्पुनर्दनस्वीकृता ।
हृच्छूलं पार्श्वशूलं च तथा चार्धावभेदकम् ।। 8 ।।
अपचिं गण्डमालां च वातरक्तं हनुग्रहम् ।
कामिलं पाण्डुरोगं च अश्मरिं च विनाशयेत् ।। 9 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

तैलमेतत्प्रयोक्तव्यं विष्णुना परिकीर्तितः ।
नारायणमिति ख्यातं वाता सृक्सनिवारणम् ।। 10 ।। ||19||

## 20. वटाङ्कुरतैलम्

लोहचूर्णं तथा केशि शारिबे द्वे तथैव च ।
मार्कवस्वरसे नैव तैलं मृद्वग्निना पचेत् ।
शिरस्युत्पत्तिकाकेशाः ग्लायन्ते घनकूर्जिताः ।। 1 ।। ||20||

## 21. अरिमेदादितैलम्

अरिमेदस्त्वचः पक्त्वा तुलां द्रोणे जले शृतैः ।
चतुर्भागावशेषेऽस्मिन् तैलप्रस्थद्वयं क्षिपेत् ।। 1 ।।
मञ्जिष्ठामधुकं लोध्रमरिमेदस्यकल्कलम् ।
मरीचं कट्फलं लाक्षान्यग्रोधोदुम्बरत्त्रुटि ।। 2 ।।
त्वक्तत्र जातिकर्कोललवङ्गागरुदारुकम् ।
कर्पूरङ्गैरिकं सेव्यं शतांह्वा धातकि समम् ।। 3 ।।
पृथगक्षप्रमाणानि कल्कद्रव्याणि निक्षिपेत् ।
सुपक्वं तैलमेतद्धि दन्तमूलोद्भवान् गदान् ।। 4 ।।
सौषिरादि निहन्त्याशु क्रिमिदन्तादिकावहम् ।
सर्वेषु मुखरोगेषु दौर्गन्ध्यं सहितेषु च ।
दन्तव्रणेषु दन्तानां स्थैर्यकृदद्वीर्यपूजितम् ।। 5 ।। ||21||

## 22. गुळूचितैलम्

तुलां पचेत् जलद्रोणि गुळूच्यापादशेषितम् ।
क्षीरद्रोणयुतं कल्कैः पचेत्तैलाढकं शनैः ।। 1 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

यष्टिमधुकमञ्जिष्ठाजीवनीयैर्युतं तथा ।
कुष्ठैलागरुमृद्वीक मांसि व्याघ्रनखं वचा ।। 2 ।।
हरेणु शावणि व्योषशतांह शृङ्गिशारिबैः ।
त्वक्पत्रागरुविश्रान्तस्थिरतामलकी बला ।। 3 ।।
नतकेसरह्रीवेरपद्मकोत्पलचन्दनैः ।
सिद्धं मृद्वग्निना तैलं पानाभ्यञ्जनवस्तिषु ।। 4 ।।
दन्यं प्रसवनं स्त्रीणां गर्भदं वातपित्तनुत् ।
तोदकम्परुजायामाशिरः कम्पामयार्धितान् ।
हन्याद् व्रणकृतान् दोषान् गुळूचितैलमुत्तमम् ।। 5 ।। ‖22‖

## 23. अमृतादितैलम्

अमृतायास्तुलापञ्चद्रोणेष्वमावतारयेत् ।
पादशेषे समक्षीरं तैलस्यार्धाढकं पचेत् ।। 1 ।।
येलामांसिनकोशीरशारिबा कुष्ठचन्दनैः ।
शतपुष्पा महामेधा मेहमेद्वर्धिजीरकैः ।। 2 ।।
काकोळिक्षीरकाकोळि श्रावण्यति बला नखैः ।
महाश्रावणि जीवन्ति विदारि कपिकच्छुभिः ।। 3 ।।
शतावरी चामलकि कर्कोटाभ्याहरेणुभिः ।
वचा गोक्षुरकैरण्डरास्ना लाक्षा सहाचरैः ।। 4 ।।
पद्मकं देवदारुश्च त्रिदशाह्वैश्च कार्षितैः ।
मञ्जिष्ठाया प्रकर्षेण मधुकाष्ठफलेन च ।। 5 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

कल्कैस्तक्षणवीर्याग्निबलस्य मूढचेतसः ।
उन्मादगानमपस्मारैः गताश्च प्रकृतिर्नये ।
वातव्याधि अरेश्रेष्ठं तैलाख्यातामृताह्वयम् ।। 6 ।। ||23||

## 24. निर्गुण्ड्यादितैलम्

निर्गुण्डिभृङ्गजातीनां काकमाच्या रसाढके ।
तैलप्रस्थं वचा भार्गी कणनागरशिग्रुभिः ।। 1 ।।
श्वेतसर्षपपाठाग्निमन्थकुङ्कुमसैन्धवैः ।
हिङ्गुशुण्ठियुतैः कर्षसम्मितैः कल्कितैः पचेत् ।। 2 ।।
तैलं जिह्वामया सर्वानुपजिह्वान्विशेषतः ।
सप्तषष्टिमुखोद्भूतान्रोगानाशु व्यपोहति ।। 3 ।। ||24||

## 25. पर्पटादितैलम्

पर्पटलशुनमुण्डि इन्द्रवल्यक्षदृक्सोमरसैः ।
चित्रा तैलविपक्वं वृद्धिहरपानलेपाभ्याम् ।। 1 ।। ||25||

## 26. इन्द्रवल्लीतैलम्

इन्द्रवल्ली बलैरण्डाशिग्रुयुग्मपुनर्नवा ।
लशुनं यक्षदृक् भार्गी पृथग्विंशफलान्वितम् ।। 1 ।।
पूतिकं दशमूलं च चव्यचित्रकबर्बरम् ।
निर्गुण्डैरण्डवरुणस्वदंष्ट्राभिरुमोरटम् ।। 2 ।।
तीव्रदन्तिकुलत्वं च सारिणि सुरदारु च ।
तेषां पृथग्दशफलं क्षुण्णं सर्वं वहेम्भसि ।। 3 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

प्रक्षिप्य विपचेत्तस्मिन् चतुर्भागावशेषितम् ।
परिशृते कषायेऽस्मिन्क्षीरद्रोणसमन्वितम् ।। 4 ।।
चित्रतैलाढकं वज्रि क्षारे च कुडबद्वयम् ।
पञ्चकोलौषणाजाजि वचा हिङ्गुहरेणुकम् ।। 5 ।।
शारिबागुरुरास्ना च शतपुष्पाश्वगन्धिका ।
जीवकर्षभकौमांसिमधुकं देवदारु च ।। 6 ।।
त्वगेलक्रिमिचित्भार्गी सैन्धवं मुण्डिदीप्यकम् ।
एतत् सर्वं समालोड्य साधयेन्मृदुवह्निना ।। 7 ।।
पक्वं विदृदिगुल्मार्शो कफकुष्ठकटिग्रहम् ।
शूलाद्मान् प्लीहानाहक्रिमिगुल्ममोहदम् ।। 8 ।।
वातव्याधिमुदावर्तं श्वासकासमरोचकम् ।
तथाष्ठिलाप्रतितुनिं योनिप्रकोष्टमागतम् ।। 9 ।।
नारीणां कर्मणि व्याधौ येतान्याश्वानि वृद्धयेत् ।
विशेषाद्वृद्धिमखिलं नाशयेन्नात्र संशयः ।। 10 ।। ||26||

## 27. वातान्तकतैलम्

वातान्तकबलावह्नि चाश्वगन्धा पुनर्नवा ।
चिरबिल्वार्कनिर्गुण्डि तपसि खदिरद्वयम् ।। 1 ।।
करञ्जगोक्षुरं हिम्स्रादुत्तूरं गिरिकर्णिका ।
वज्रवल्लिकुबेराक्षितर्कारिवरणं बिडम् ।। 2 ।।
सोमवृक्षचकोरण्ड चाग्निमन्थं च केतकी ।
पर्पाटकं पलाशं च महाबेरी च लुङ्गकम् ।। 3 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

क्षुद्रनागाबलाशूकं वृश्चिकाळि स्नुहिं प्रिया ।
कोशातकी शिरीषं च शिग्रुद्वयगजप्रियः ।। 4 ।।
अजागन्धा महागन्धा बर्बरं गैरविप्रिया ।
तेषां पत्ररसं चैव आढकं च पृथक् पृथक् ।। 5 ।।
द्विद्रोणे तिलतैलं च दद्याच्चूर्णं क्षिपेत्ततः ।
त्रिकटुत्रिफलाहिङ्गुचित्रकम् लशुनं वचा ।। 6 ।।
सर्षपं लवणं पञ्चक्षारद्वयनिवारणि ।
करञ्ज नक्तमालं च पीलुद्वयशतांह्वयम् ।। 7 ।।
शिग्रुद्वयामृतापाठाजीरद्वयसभृङ्गकम् ।
पृथक् स तु फलं चैव स्नुहिक्षीराढकद्वयम् ।। 8 ।।
विपचेद्वैद्यविप्रं वा वरपक्वं परिशृतम् ।
लेपमात्रेण नश्यन्ति स्नायुसन्ध्यस्थिकोष्ठजम् ।। 9 ।।
धनुर्वातं शिरःकम्पं दन्तापतनमायुतम् ।
मन्यास्तम्भं हनुस्तम्भं जिह्वास्तम्भं गलग्रहम् ।। 10 ।।
ऊरुस्तम्भं कटिस्तम्भं वस्तिवं क्षणशूलजित् ।
आक्षेपतिमिरं हन्ति अपबाहुकशल्यकम् ।
वातान्तकमिदं तैलं सर्ववातनिबर्हणम् ।। 11 ।। ||27||

## 28. बलातैलम्

बलामूलान्यष्टभागांश्चत्वारो दशमूलकान् ।
क्वाथश्चतुर्गुणे तोयेऽथवा द्रोणस्य सङ्ख्यया ।। 1 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

तत्राढकं क्षिपेत्क्षीरमाढकं मिश्रयेद्धधि ।
आटकं माषकुल्माषयूषं परियुतं क्षिपेत् ।। 2 ।।
तैलं तिलानां द्रोणं च कटाहे पाचयेत् शनैः ।
जीवन्ति जीवनीया च काकोल्यौ जीवकर्षकान् ।। 3 ।।
मेधे द्वौ सरळं दारु बिल्वकं च कुचन्दनम् ।
कालेयकं सञ्जरसं मञ्जिष्ठा त्रिसुगन्धकम् ।। 4 ।।
मांसि शैलेयकं कुष्ठं वचाकालानुशारिबा ।
शतावरी चाश्वगन्धा शतपुष्पा पुनर्नवा ।। 5 ।।
किण्वकं चोशीरामुस्तायष्टितालेसपत्रकम् ।
कटुत्रयं वालुकौ च सर्वं तत्रैव मिश्रयेत् ।। 6 ।।
सिद्धं तत्र प्रदुष्येत ततो मङ्गलवाचनम् ।
सौवर्णे रजते कुम्भे अथ वामृन्मायायसे ।। 7 ।।
स्वनुगुप्तं दारयित्वापानाभ्यङ्गे निरुहके ।
वस्तौ वापि च प्रक्तव्यं मनुष्यस्य यथाबलम् ।। 8 ।।
वातार्धिते तथा भग्ने भग्नेवापि प्रदापयेत् ।
या च वन्ध्या भवेन्नारी पुरुषस्याल्परेतसः ।। 9 ।।
क्षीणो वा दुर्बलो वापि तथा जीर्णज्वरातुरः ।
आमवातनराणां च तथा पक्ष प्रकुञ्चके ।। 10 ।।
प्रतानके प्रयोक्तव्यं तथा शुष्के हनुग्रहे ।
कर्णमूले चाक्षिशूले मन्यस्तम्भे च पार्श्वके ।। 11 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

सर्ववातविकाराणां हन्ति तैलं यथामृतम् ।
हन्ति सश्वासकासं च गुल्मर्षो ग्रहणि गदम् ।। 12 ।।
अष्टादशानि कुष्ठानि शीघ्रं वाऽपि नियच्छति ।
ग्रहभूतपिशाचानां शाकिनीडाकिनी तथा ।। 13 ।।
दूरादेव पलायन्ते बला तैलस्य दर्शनात् ।
अपस्मारादि ये दोषाः तांश्च दूरानि यच्छति ।। 14 ।।
वृद्धो युवानो भवति वन्ध्या च लभते सुतम् । ||28||

## 29. जम्बीरादितैलम्

तैलप्रस्थं सधान्याम्लं जम्बीरस्य रसाढके ।
यष्टित्रिजातकोशीरकुष्ठजातिचवायकैः ।। 1 ।।
कर्कोलदारुमरिचकर्पूरमृगनाभिका ।
त्रिफलाङ्कोलबीजैश्च चन्दनागरुकुङ्कुमैः ।। 2 ।।
सम्यक्सिद्धमिदं तैलं सर्ववातविकारजित् ।
शिरोङ्गदाहशमनं अङ्गदौर्गन्ध्यनाशनम् ।
पुष्टिकान्तिकरं बल्यं सर्वधातुविवर्धनम् ।। 3 ।। ||29||

## 30. त्रिपुराभैरवतैलम्

सितं गन्धकताळकं मणिशिला कोष्टं कणा सैन्धवं
जेपाळं शिभिकुत्थटकणा निशा क्षारत्रयं चित्रकम् ।
मारीचं लशुनं सुपञ्चलवणं सर्वं समञ्चूर्णितं
स्नूह्यार्कापयसारनाळकनकनिर्गुण्डिकासारसैः ।। 1 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

गोमूत्रेण सुमर्दितं तु मथनाकल्केन लेपाम्बरं
छायो शुष्कसुवर्तिकानिल रिपुस्तैलेन प्रज्वाल्यते ।
तत्तैलं धृतलोहपात्रविहितं सर्वाङ्गलेपैर्बहिः
क्वाथे नागबलानुलेपसहितं युक्तैर्बुधैः सेवितम् ।। 2 ।।

शूलं पाण्डुविषादिकाकरगुदगुल्फं ग्रहं पिण्डिको
ऊरुस्कन्दज गृध्रसंव्रणको पङ्गुत्वमेढ्रो गदम् ।
विस्फोटोदरवर्तिव क्षणमहा श्रोणित्रि कापृष्टका
खञ्जं कुब्जक वामपार्श्व उदरा वेष्टोरुबाहुर्नखम् ।। 3 ।।

मूकत्वं बधिरत्वदन्तशिथिलं बादिर्यनेत्रद्वयं भ्रू
शङ्खोर्धललाट मूर्ध्नि लशुना एकाङ्गसर्वाङ्गगम् ।
पक्षाक्षेपकदण्डक श्रममदामोह भ्रमाज्रम्बिकाः
स्वस्थग्लानविषादरोषशिशिरा दुर्गन्धपूताढ्यका ।। 4 ।।

एतेषानिलशीतनाशनरुजा पित्तं कफं दोषजं
श्वासं लूतिजगण्डजज्वरहरं कण्डूयविर्पापहम् ।
गुल्माष्ठीलविषूचिका व्रण निशा भूतामपस्मारयोः ।
शाकिन्या भयनाशनं बलकरं दीर्घायुवृद्धिप्रदम् ।। 5 ।।

कान्तिं पुष्टिविवर्धनं दृढकरं धैर्यं स्थिरं लक्षितं
कार्मं दिव्यबलं सुवर्धनसुखाध्यानाग्निद्वन्द्वैर्हता ।
सिद्धो मन्त्रविषं विनश्यति यदा सूर्योदयान्तेतमः
कारुण्यं रसभावभव्यजननं श्रीपूज्यपादोदितम् ।। 6 ।। ॥30॥

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 31. प्राणेश्वरतैलम्

त्रिफलषट्फलं दन्ति कचोरं हंसपादिका ।
काकमाचि बृहद्भृङ्गि स्नूहिरर्कश्च बर्बरा ।। 1 ।।
गान्धारी विश्वदन्ती च गुग्गुलुर्जतुगुग्गुलु ।
संहारभैरवादण्डे कर्कोलं च वराटकम् ।। 2 ।।
चातुर्जातमुशीरं च श्रीखण्डं चव्यनागरम् ।
समांशं विजयाङ्कोल महिषिवल्कलारुहा ।। 3 ।।
पञ्चबिल्वारुद्रझटा जेपालं सममिश्रितम् ।
वज्रबीजं तिलाद्वीजं वाकुचिर्चिककांस्तथा ।। 4 ।।
एतानि समभागानि भाण्डं लौकिकमानकः ।
प्रमाणफलमित्युक्तं कषायं चतुर्भागिकम् ।। 5 ।।
तैलाढकं प्रयोक्तव्यं पचेत्शुभदिनं भिषक् ।
येषां मरीचतैलानां नेत्ररोगकफं हरेत् ।। 6 ।।
श्रोणितं चामवातस्य गूढगुल्फं च गृध्रसि ।
पाण्डुरोगज्वरं हन्याद्गर्भिणी सन्निपातजित् ।
प्राणेश्वरमहातैलं पार्वतीपुत्रशासनात् ।। 7 ।। ||31||

## 32. ओष्ठरोगे निम्बतैलम्

अझटा निम्बनिर्गुण्डि स्वरसेन विपाचितम् ।
निशा कल्कयुतं तैलं ओष्ठरोगविनाशनम् ।। 1 ।। ||32||

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 33. ज्वरादौ त्रिशूलितैलम्

फलं त्रिशूलिकामूलं वचालशुनरोहिणि ।
कुष्टजीरकमौर्वीकं सैन्धवं निष्कमात्रकम् ।। 1 ।।
तैलप्रस्थं प्रदातव्यं करपाकं च कारयेत् ।
देव धूपहरिद्रे द्वे सूक्ष्मचूर्णानि कारयेत् ।। 2 ।।
तत्तैलं लेपमात्रेण विषमज्वरनाशनम् ।
चातुर्थिकं च कम्पं च शीतिकं सततं तथा ।
सन्निपातं ज्वरं हन्ति पूज्यपादेन भाषितम् ।। 3 ।। ||33||

## 34. विषमुष्टितैलम्

विषतिन्दुकवृक्षस्य फलसारं तु भाजने ।
द्व्याढकं चारनाळेन मात्र पादोदकं तथा ।। 1 ।।
जम्बीरनीरद्विप्रस्थं प्रस्थं तद्वीजचूर्णितम् ।
प्रस्थमेरण्ड तैलस्य द्विप्रस्थं तिलतैलकम् ।। 2 ।।
शनैर्मृद्वग्निना पक्त्वा नववस्त्राणि पीडयेत् ।
सर्ववातं निहन्त्याशु पक्षघातं परिसृतम् ।
शोषं च रक्तवातं च सुप्तवातं विशेषतः ।। 3 ।। ||34||

## 35. प्रकारान्तरेण धात्र्यादितैलम्

धात्र्यश्वगन्धातिबलाशिरीषोशीरशारिबा ।
तेषां क्वाथे पचेत्तैलं क्षीरलाक्षारसान्वितम् ।।
पिष्टैर्यष्टिनिशाभीरुमूर्वामुस्तासुरद्रुमौ ।
पिप्पलीन्द्रयवानन्ता विषा तिक्ता झटामयैः ।। 1 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

मृणालबिसशालूकमांसिचन्दनपद्मकैः ।
स चतुर्जातकी सिद्धं तदभ्यङ्गादिभिर्यचेत् ।। 2 ।।
जीर्णज्वरां गजघुने पार्श्वपृष्टशिरोरुजः ।
विसर्पकम्पविस्फोटं रक्तपित्तमसृग्धरम् ।। 3 ।।
कासश्वासप्रतिश्यायन् गर्भिणी सूतिकान् गदान् ।
कामिलं पाण्डुरोगं च मांसिं रक्तक्षयं तथा ।। 4 ।।
वर्णहानिं च रौक्ष्यं च कार्श्यं चाङ्गस्य नाशयेत् ।
एकादश च षट् चैव शोषिणां य उपद्रवाः ।
बह्वोदनं च प्रशमेन्मेधान्निरिव दृष्टिमान् ।। 5 ।। ||35||

## 36. अश्वगन्धबलालाक्षादितैलम्

अश्वगन्धबलालाक्षा प्रस्थं पृथक् पृथक् ।
जलद्रोणे विपक्तव्यं चतुर्भागावशेषितम् ।। 1 ।।
तैलं त्रिमानिकं दद्यादधिमस्तु चतुर्गुणम् ।
अश्वगन्धबलारास्ना कान्तिकुष्ठाब्दचन्दनैः ।। 2 ।।
निशां निक्तां शताह्वां च द्राङ् मूर्वां च समू[ल]कम् ।
सुरदारु समञ्जिष्ठा मधुकोशीरशारिबा ।। 3 ।।
समभागानि सर्वाणि कल्ककृत्य विपाचयेत् ।
सर्वज्वरहरं पत्थ्यं शोषघ्नं परिबृंहणम् ।। 4 ।।
कासश्वासहरं चैव सर्वधातुविवर्धनम् ।
एतदभ्यञ्जनं श्रेष्ठं क्षयव्याधिहरं परम् ।। 5 ।। ||36||

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 37. वाते विजयभैरवीतैलम्

रसागन्धशिलाताळं चूर्णं संमध्यकाञ्जिकैः ।
लिप्त्वा वस्त्रिकृतां वर्तिं तैलाक्तां ज्वालयेत्पुनः ।। 1 ।।
तद्द्रुतं ग्राहयेत्तैलं मधपात्रे द्रुते सति ।
तत्तैलं लेपयेत्पात्रं नागवल्यास्त भक्षयेत् ।। 2 ।।
बाहुकम्पं शिरःकम्पं एकाङ्गं जानुकम्पनम् ।
नाशयेत् भक्षणाल्लेपात्तैलं विजयभैरवम् ।। 3 ।। ||37||

## 38. हस्तिकर्णितैलम्

सौवीरे हस्तिकर्ण्याश्च कन्दनाळदलान्वितम् ।
क्षोदयित्वावृतं सम्यक् चतुर्भागावशेषितम् ।। 1 ।।
तस्याः स मूलकल्कं च पिष्ट्वा क्षीरचतुर्गुणे ।
तैलप्रस्थं पचेद्वैद्यं सम्यक् पक्त्वैव पाचयेत् ।। 2 ।।
पानाभ्यञ्जनवस्तिश्च नस्यनेत्राञ्जनादिना ।
शीतज्वरहरं श्रेष्ठं विषमज्वरनाशनम् ।। 3 ।।
सन्ततादिहरं कफनाशनं परमौषधम् । ||38||

## 39. गर्भिणीज्वरे एरण्डतैलम्

एरण्डलोध्रागरुहस्तिकर्णी
मृद्वीकलाक्षाम्बुधलोध्रमूर्वा ।
संसिद्धतैलं पयसा प्रयुक्तं
गर्भान्तनानासकलज्वरघ्नम् ।। 1 ।। ||39||

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

मृणालबिसशालूकमांसिचन्दनपद्मकैः ।
स चतुर्जातकी सिद्धं तदभ्यङ्गादिभिर्यचेत् ।। 2 ।।

जीर्णज्वरां गजघुने पार्श्वपृष्टशिरोरुजः ।
विसर्पकम्पविस्फोटं रक्तपित्तमसृग्धरम् ।। 3 ।।

कासश्वासप्रतिश्यायन् गर्भिणी सूतिकान् गदान् ।
कामिलं पाण्डुरोगं च मांसिं रक्तक्षयं तथा ।। 4 ।।

वर्णहानिं च रौक्ष्यं च कार्श्यं चाङ्गस्य नाशयेत् ।
एकादश च षट् चैव शोषिणां य उपद्रवाः ।
बह्वोदनं च प्रशमेन्मेधान्निरिव दृष्टिमान् ।। 5 ।। ||35||

## 36. अश्वगन्धबलालाक्षादितैलम्

अश्वगन्धबलालाक्षा प्रस्थं पृथक् पृथक् ।
जलद्रोणे विपक्तव्यं चतुर्भागावशेषितम् ।। 1 ।।

तैलं त्रिमानिकं दद्यादधिमस्तु चतुर्गुणम् ।
अश्वगन्धबलारास्ना कान्तिकुष्ठाब्दचन्दनैः ।। 2 ।।

निशां निक्तां शताह्वां च द्राङ् मूर्वां च समू[ल]कम् ।
सुरदारु समञ्जिष्ठा मधुकोशीरशारिबा ।। 3 ।।

समभागानि सर्वाणि कल्ककृत्य विपाचयेत् ।
सर्वज्वरहरं पत्थ्यं शोषघ्नं परिबृंहणम् ।। 4 ।।

कासश्वासहरं चैव सर्वधातुविवर्धनम् ।
एतदभ्यञ्जनं श्रेष्ठं क्षयव्याधिहरं परम् ।। 5 ।। ||36||

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 37. वाते विजयभैरवीतैलम्

रसागन्धशिलाताळं चूर्णं संमध्यकाञ्जिकैः ।
लिप्त्वा वस्त्रिकृतां वर्तिं तैलाक्तां ज्वालयेत्पुनः ।। 1 ।।
तद्रुतं ग्राहयेत्तैलं मधपात्रे द्रुते सति ।
तत्तैलं लेपयेत्पात्रं नागवल्यास्त भक्षयेत् ।। 2 ।।
बाहुकम्पं शिरःकम्पं एकाङ्गं जानुकम्पनम् ।
नाशयेत् भक्षणाल्लेपात्तैलं विजयभैरवम् ।। 3 ।। ||37||

## 38. हस्तिकर्णितैलम्

सौवीरे हस्तिकर्ण्याश्च कन्दनाळदलान्वितम् ।
क्षोदयित्वावृतं सम्यक् चतुर्भागावशेषितम् ।। 1 ।।
तस्याः स मूलकल्कं च पिष्ट्वा क्षीरचतुर्गुणे ।
तैलप्रस्थं पचेद्वैद्यं सम्यक् पक्त्वैव पाचयेत् ।। 2 ।।
पानाभ्यञ्जनवस्तिश्च नस्यनेत्राञ्जनादिना ।
शीतज्वरहरं श्रेष्ठं विषमज्वरनाशनम् ।। 3 ।।
सन्ततादिहरं कफनाशनं परमौषधम् । ||38||

## 39. गर्भिणीज्वरे एरण्डतैलम्

एरण्डलोध्रागरुहस्तिकर्णी
मृद्वीकलाक्षाम्बुधलोध्रमूर्वा ।
संसिद्धतैलं पयसा प्रयुक्तं
गर्भान्तनानासकलज्वरघ्नम् ।। 1 ।। ||39||

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 40. गर्भरोगे हस्तिकर्णितैलम्

हस्तिकर्णिविशालाक्षं बुधलोध्रागरुर्वचा ।
मूर्वा मृद्वीक चैरण्ड अश्वगन्धिसमांशकम् ।। 1 ।।
तत्कल्कं तत्कषायं च तैलं क्षीरं पचेद्दिनम् ।
हस्तिकर्ण्यादि तैलं च सकलज्वरनाशनम् ।
गर्भान्तनानारोगघ्नं सिद्धतैलमुदाहृतम् ।। 2 ।। ||40||

## 41. अपवाहुके कार्पासादितैलम्

कार्पासादिकुलुत्थानां क्वाथे तैलं पयोन्वितम् ।
स सैन्धवेन ताभ्यां च सिद्धं तदपवाहुके ।। 1 ।। ||41||

## 42. माषतैलम्

माषक्वाथेन संयुक्तं तैलं सैन्धवकल्कवत् ।
आरनाळेन सहितमपवाहुकनाशनम् ।। 1 ।। ||42||

## 43. पक्षघातादिषु माषतैलम्

कार्पासास्तिबलामाषा कुलुत्थः क्वथिते रसे ।
देवदारुवचाकुष्ठरास्नासर्षपनागरैः ।। 1 ।।
शतांह्वापिप्पलिमूलचव्यशिग्रुर्पुनर्नवैः ।
कल्कतेस्तैलमज्ञेन क्षीरेण सहितं पचेत् ।। 2 ।।
तत्पाननावनाभ्यङ्गनस्यैः सर्वानिलापहः ।
विशेषादपवाहुं च पक्षघातमथार्दितम् ।। 3 ।।
बाधीर्यं कर्णशूलं च मन्यास्तम्भं हनुग्रहम् ।
माषतैलमिदं नाम अपवाहुविनाशनम् ।। 4 ।। ||43||

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 44. वाते पञ्चाग्नितैलम्

स्नुह्यर्कसोमचिञ्चाग्नि क्षोदयित्वा पृथक् पृथक् ।
एतेषां स्वरसं प्रस्थमजामूत्रं गवां तथा ।। 1 ।।

अत्र कल्कं प्रयुञ्जीत तीक्ष्णगन्धां ससर्षपाम् ।
नागरं चित्रकं चोग्रां तैलप्रस्थं पयः समम् ।। 2 ।।

पक्वं पञ्चाग्निकं नाम तैलमभ्यञ्जनादिकम् ।
सर्ववातान्निहन्त्याशु विशेषं कोष्टशीर्षकम् ।। 3 ।। ॥44॥

## 45. वाते कार्पासादितैलम्

कार्पासास्तिबलामाषा कुलुत्थानां पृथक् पृथक् ।
प्रस्थं चित्रकमूलस्य तदर्धं च विपाचयेत् ।। 1 ।।

द्रोणद्वयेषु धान्याम्ला तस्मिन् पादावशेषिते ।
कुलुत्थकार्पासबीजं रास्नासैन्धवदारुभिः ।। 2 ।।

पिष्टैस्तैलघृतं तैले नाळिकेररुलूकयोः ।
क्षीरं च द्विगुणं दत्वा विपचेद्विनिहन्ति च ।। 3 ।।

सर्ववातान्विशेषेण विश्वभिद् गृद्ध्रसिं तथा ।
अवबाहुं पक्षघातं चतुःस्नेहोयमख्यया ।। 4 ।।

ऊरुस्तम्भे हनुस्तम्भे न च सङ्क्रमणं हितम् ।
श्लेष्मा तु मेधो बाहुल्यद्युक्त्याकक्षेपणोऽन्यथा ।। 5 ।।

कुर्याद्द्रुतोपचारं च यवः शाम्यक कोद्रवाः ।
शाकैरलवणैश्शस्ताः किञ्च तैलेः जलैश्शृताः ।। 6 ।। ॥45॥

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 46. वाते बलामूलतैलम्

बलामूलात्पलाशतं कुट्टयित्वा जले पचेत् ।
चतुर्भागावशेषेऽस्मिन् तत्कल्कं दशभिः फलैः ।। 1 ।।
तैलाढकं पचेत्सम्यक् द्विगुणं क्षीरसम्मितम् ।
एतत्सिद्धं महातैलं वातरोगहरं परम् ।। 2 ।।
गर्भिणीनां च नारीणां सूतिकानां च शस्यते ।
वाताद्यैरनिलव्याधीनशीतिर्नाशयेद्ध्रुवम् ।। 3 ।। ||46||

## 47. सर्षपतैलम्

सर्षपक्वथिते तोये तैलं प्रस्थं विपाचयेत् ।
अजाक्षीराढकयुते वचया चाश्वगन्धया ।। 1 ।।
सर्ववातान्निहन्त्याशु सुप्तवातं विशेषतः ।। 2 ।। ||47||

## 48. स्नुह्यर्कादितैलम्

स्नुह्यर्कस्वरसे सिद्धं तैलं तन्मूलकल्कवत् ।
सर्ववातान्निहन्त्याशु सुप्तवातं विशेषतः ।। 1 ।। ||48||

## 49. प्रकारान्तरेण स्नुह्यर्कादितैलम्

स्नुह्यर्कनिर्गुण्डिकवैजयन्ति रसेऽश्वगन्धागरुकुष्ठविश्वैः
वचाग्निशिग्रुद्रुमपूतिकत्वक् सिन्धूत्थरास्नाकणमूलयुक्तैः ।
सान्द्रामिळे ग्रन्थिपुनर्नवैश्च ससर्षपैस्साधुविपक्वमेतत्
तैलं निहन्यादनिलार्तिमुग्रमभ्यञ्जनाद्दृद्रसि विश्वभिश्च ।। 1 ।।
||49||

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 50. बला गुळूचितैलम्

बला गुळूचिमेरण्डकोरण्टं च पृथक्समम् ।
जलद्रोणे विपक्तव्यं चतुर्भागावशेषितम् ।। 1 ।।
तस्मिन् क्वाथ समं तैलं द्विगुणं क्षीरसम्मितम् ।
अशीतिवातजान्रोगान् तैलमेतद्व्यपोहति ।
पानानुवासनाभ्यङ्गनश्यैर्वातासृजं जयेत् ।। 2 ।। ||50||

## 51. वाते प्रसारणीतैलम्

तोयद्रोणे प्रसारण्या बलापलशतं पादशेषं विपाच्यं
तस्मिंस्तुल्य दध्नि द्विगुणितजले पञ्चशुण्ठि फलानि ।
द्वे द्वे रास्ना प्रसारण्यानलमधुकसिन्धूद्भवग्रन्थिकानां
द्वे च क्षारस्य पिष्ट्वा क्वथितमनिलहृत्तैलमभ्यञ्जनाद्वै ।।
अशीतिर्वातजान्रोगान् तैलमेतद्व्यपोहति ।
गृध्रसिमस्ति भङ्गं च अन्तवृद्धिं च नाशयेत् ।। 1 ।।
अपस्मारं ततोन्मादं विद्रधिं मन्दगामिताम् ।
त्वग्गताश्चापि ये वाताः शिरा सन्धिगतश्च ते ।। 2 ।।
पङ्गुर्वा पाठसर्पिर्वा पीत्वा तत् सम्प्रधावति ।
सर्वं प्रशमयेत्येत तैलमात्रेयपूजितम् ।। 3 ।। ||51||

## 52. लघुप्रसारणीतैलम्

प्रसारणीरसे सिद्धं तैलमेरण्डजं पिबेत् ।
यथा बलं सर्ववातान्कफरोगान्विनाशयेत् ।। 1 ।। ||52||

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 53. वाते लशुनादितैलम्

लशुनस्य दलं त्रिंशत् सैन्धवस्य फलद्वयम् ।
तैलमेरण्डजं चैव सम्यक्तुल्यं निदापयेत् ।
दशरात्रौ स्थितं पेयं सर्ववातारुजापहम् ।। 1 ।। ||53||

## 54. स्वदंष्ट्रादितैलम्

स्वदंष्ट्रायाः कषायस्य प्रस्थौ द्वौ पयसौ समौ ।
षट्फलं श्रृङ्गवेरस्य गुळस्य च पलाष्टकम् ।
तैलप्रस्थं विपक्वं तैर्दद्यात्स वानिलार्तिषु ।। 1 ।। ||54||

## 55. वाते अर्कादितैलम्

अर्कचित्रकनिर्गुण्डिभूपीलुचिरबिल्वकम् ।
वैजयन्तिबलाशिग्रुकुलुत्थबदराणि च ।। 1 ।।
जलद्रोणे विपक्तव्यं चतुर्भागावशेषितम् ।
तत्र सर्षपतैलस्य प्रस्थमस्तु चतुर्गुणम् ।। 2 ।।
एलाश्वगन्धसिन्धूत्थरास्नाचव्यगरूणि च ।
वचाशिग्रुकणाशुण्ठिद्विपुनर्नवचन्दनम् ।। 3 ।।
कर्कोलकुङ्कुमबला कौन्तिपुत्रकपौष्करम् ।
शतपुष्पा नागपुष्पं कल्ककृत्य विपाचयेत् ।। 4 ।।
एतत्तैलं महावीर्यं वातव्याधिविनाशनम् ।
ऊरुस्तम्भे सुप्तवाते गृध्रस्यामपबाहुके ।
पक्षाघाते हनुस्तम्भे बाह्यायामपि शस्यते ।। 5 ।। ||55||

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 56. कैतकीतैलम्

कैतकीस्वरसे प्रस्थं तैलप्रस्थं विपाचयेत् ।
चन्दनं मधुकं कुष्ठं त्वगेलापत्रमेव च ।। 1 ।।
कारवीचोरमुस्ता च सुरदारुसुगन्धि च ।
उशिरं हिरिवेरं च बलाजाति बला तथा ।। 2 ।।
कल्ककृत्य तथा पक्वं वातस्रुग्मारुतातिनुत् ।
पित्तोद्रिकं कफोद्रिक्तं सर्वोद्रिक्तं च नाशयेत् ।। 3 ।। ॥56॥

## 57. पूतिकर्णस्य कार्पासफलतैलम्

तरुणं कार्पासफलं पिष्ट्वा तैलं विपच्य तद्बिन्दून् ।
※श्रवसिनि दद्याद्द्वित्रानवान्यतियदिपूयघर्मर्षम् ।। 1 ।।
निर्गुण्डिस्वरसस्तैलं सिन्धुधूमरजो गुडः ।
पुराणपूतिकर्णस्य शमनो मधुसंयुतः ।। 2 ।। ॥57॥

## 58. कर्णरोगे निर्गुण्डितैलम्

निर्गुण्डिजातिरविभृङ्गरसोनरंभावार्ताक-
शिग्रुसरसार्द्रककारवल्याः तेषां रसे तिलरुहम् ।
श्रुतिमाद बादिर्यशूलमपहन्ति च पूतिकर्णम् ।। 1 ।। ॥58॥

## 59. प्रकारान्तरेण कर्णरोगे तैलम्

चूर्णेन गन्धा रजनी करञ्जो
मुस्ततिकेन कटुतैलफलाष्टकं च ।

---

※ अपपाठः चिन्तनीयः ।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

दुत्तूरपत्ररसतुल्यमिदं विपक्वं
पूतिं हरभेरभवामपि कर्णजातम् ।। 1 ।। ||59||

## 60. कर्णबर्बरतैलम्

कुष्ठहिङ्गुवचादारुशताह्वां विश्वसैन्धवैः ।
पूतिकर्णापहं तैलं बस्तमूत्रेण साधितम् ।
धूपनं कर्णदौर्गन्ध्ये गुग्गुलु श्रेष्ठ उच्यते ।। 1 ।। ||60||

## 61. बर्बरतैलम्

बर्बररसेदतैलं तन्मूलत्वद्व्चोषणैः सिद्धम् ।
स निशा सैन्धवं लशुनैश्शूलं कर्णस्य पूतिगन्धहरम् ।।1।। ||61||

## 62. तुरुष्कतैलम्

तुरुष्ककल्कसंयुक्तं तुलसि स्वरसे शृतम् ।
तैलं पूयान्वितं कर्णरोदमाशु विनाशयेत् ।। 1 ।। ||62||

## 63. कर्णस्रावारितैलम्

द्रुतिं लिकुचसारेण पृष्टकर्णौ [च] प्रेरयेत् ।
कर्णशूलं पूतिगन्धं कर्णस्रावं च नाशयेत् ।। 1 ।। ||63||

## 64. शतावरीतैलम्

शार्ङ्गेरिपत्रमरीचनिशाभिः कल्कतैः शृतम् ।
कर्णस्रावं पूतियक्तं तैलमेतद् व्यपोहति ।। 1 ।। ||64||

## 65. प्रकारान्तरेण शतावरीतैलम्

शतावरीवाजिगन्धा पयस्वैरण्डजीवकैः ।
तैलं विपक्वं स क्षीरं पालीनां पुष्पकृत्परम् ।। 1 ।। ||65||

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 66. वाते पञ्चस्नेहतैलम्

दशमूलबलामाप कार्पसास्थिकुलित्थकः ।
प्रस्थं प्रस्थं पृथक् क्षुण्णं जलद्रोणे विपाचयेत् ।। 1 ।।
सूर्पकं च तया युक्तं पादशेषेण तेन तम् ।
वराहतिलजैरण्डनाळिकेरजचक्रजः ।। 2 ।।
पृथक् पृथक् द्विकुडुबं सस्नेहं द्विगुणं पयः ।
कल्कैरेतैर्विपक्तव्यं रास्ना सैन्धवदारुकम् ।। 3 ।।
कार्पासास्थिकुलुत्थाग्निकं गण्डीरं च सुपेषितम् ।
सम्यक् पक्त्वा विदित्वा तु तैलमेतद्विशेषितम् ।। 4 ।।
जयेद्वातरुजास्तम्भदीर्घभग्नरुजं तथा ।
बाहुशोफाय बाहुं च बाहुस्तम्भं च गृद्रसि ।। 5 ।।
करोति बाहुवृद्धिं च वातशेषापहारि च ।
पञ्चस्नेहमिदं प्रोक्तं ब्रह्मणा निर्मितं पुरा ।। 6 ।। ||66||

## 67. श्रोणिके केतकितैलम्

केतकिमूलजे सारे तत्समे जललक्षिजे ।
अत्र कल्का नियोज्यानि मधुकं चन्दनं तथा ।। 1 ।।
एलालवङ्गकर्कोलमसिपत्रसुरांह्वयम् ।
सुगन्धापुष्करोशीरनखचोरक्तसंयुतम् ।। 2 ।।
तैलमेतत्समं क्षीरं विपचेन्मृदुवह्निनाम् ।
वातरक्ते सशोषे तु पित्तरक्ते कफोत्थिते ।। 3 ।।
संसृष्टे दाहयुक्ते च तैलमेतत्प्रशस्यते । ||67||

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 68. गुळूच्यादितैलम्

गुळूच्या एकभागस्यात्तदर्धं चन्दनं भवेत् ।
उशीरं च तदर्धं स्यात् तदर्धं हिरिवेरकम् ।। 1 ।।

जलद्रोणे विपक्तव्यं चतुर्भागावशेषितम् ।
तत्कषायं परिश्राव्यं तैलप्रस्थं विपाचयेत् ।। 2 ।।

तैलस्य द्विगुणं क्षीरं रसमामळकस्तथा ।
अत्र कल्कं प्रवक्ष्यामि मधुकं चन्दनं तथा ।। 3 ।।

कुष्ठं शतावरी चाश्वगन्धगुग्गुलकं तथा ।
शारिबा च बलारास्नाकौन्तिपत्रं घनं जटा ।। 4 ।।

नयनं केशजं रोगं हन्तिमात्रेयपूजितम् ।। 5 ।। ||68||

## 69. नाळिकेरादितैलम्

नाळिकेरसमेलनसाधितं चन्दनोत्पलमुशीरशारिबैः
वारिरिक्तमधुकाञ्जनचोरैः पद्मकेसरजटामिशि
पद्मकन्दनळमांसितुरङ्गैः ।। 1 ।।

देवदारुसरळागरुकालैः दुग्धं सिक्तमतुलं
तिलतैलं मूर्ध्नितर्पणमरीवहितं स्यात् ।
मूर्ध्ननेत्रभवसर्वगदास्तं नाशयेदधितवानिदमरि ।। 2 ।।||69||

## 70. भृङ्गामलकतैलम्

भृङ्गामलकरसस्य प्रस्थं क्षीराढके फलं यष्ट्या
तैलप्रस्थं पक्वं बला कमपि कोकिलान्कुरुते ।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

अन्धमनन्धं कुरुते बधिरमबधिरं तथैव च दन्तं
उपचितपीनोरस्को भवति युवा सप्तरात्रेण ।। 1 ।। ||70||

## 71. अरुणादितैलम्

अरुण रिपु गुळूचि कूलकानिम्ब धात्रि
तरुणजल कुमारी केतकिस्वस्तिकानम् ।
सलिलमपि च कुष्ठस्यापि तैलं पयश्चे-
त्सलिलमपि समानं भागतो दाहपक्वम् ।। 1 ।।

अगळरुघन गुळूचि जातिकर्कोल
यक्तैर्मधुकनयनभूषाशारिबावारिसितैः ।
त्रिशुरभिशशिकुष्ठो शिरमुस्तोत्पलाद्वै-
र्मिशितगरविदारि स्पृक्क मांसिक्षतोथैः ।। 2 ।।

एतत्तैलं शितपिण्डाभिधानं
चक्षुमूर्ध्नोदाहपात्तन्निहन्यात् ।
वाता स्फोटारुक्षतामूर्ध्नजाना-
मक्ष्णोश्चापि श्रावतैर्मिर्यकाभान् ।। 3 ।। ||71||

## 72. शिरोव्याधिनाशने तुङ्गद्रुमतैलम्

तुङ्गद्रुमस्य तरुसास्य जलेषु गन्धा
लामञ्जयष्टिमधुकोत्पलचन्दनानाम् ।
कल्केन दुग्धसमिलेन विपक्व-
मेतत्तैलं शिरोनयनतर्पणमर्पणेन ।। 1 ।। ||72||

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 73. अन्तवृद्धिगे एरण्डतैलम्

गोमूत्रैरण्डतैलं च त्रिफला च समन्वितम् ।
क्वाथे लाक्षाथ तुल्यांशं तैलशेषं विपाचयेत् ।
तत्तैलं तु पिबेत् करुषमन्त्रवृद्धिप्रशान्तये ।। 1 ।। ॥73॥

## 74. ज्वरे हस्तिकर्णितैलम्

पत्रं च कन्दनाळं च मूलं पुष्पं गजेन्द्रकर्ण्याश्चा-
म्रारनाळपक्वं तैलं समदुग्धकं पचेत् पिष्ट्वा ।
यष्टिचोरकमांसिजटिलाकटुरोहिणि रास्ना
मञ्जिष्ठा तृटितिक्तकमूर्वासञ्जरससोरजन्याश्च ।
आम्रनाळपक्वं तैलं समदुग्धकं पचेत्पिष्ट्वा
संलोड्यपक्वमेतत्पित्तज्वरमाशु सन्ततानिश्च ।। 1 ।। ॥74॥

## 75. त्रिजाततैलम्

त्रिजातं चन्दनोशीरदारुतिक्तैलयष्टिभिः ।
सुगन्धिचोररुग्माङ्गितृटियुग्मं च सादयेत् ।। 1 ।।
केतकि केतकितोये सपयस्कं तिलोद्भवम् ।
तदातरक्त शमयेत् सोपद्रवमपि ध्रुवम् ।। 2 ।। ॥75॥

## 6. चोचादितैलम्

चोचचोरनखपत्रहरेणु
जीवकट्फलत्रिवृद्धयमेधा ।
अश्वगन्ध्यागरुमांसिसर्षपं
नागचम्पकबलाद्विसर्जजम् ।। 1 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

पेष्यपाचिकविन्दंयत्तुलाह्वं
वातशोणितहितं परमं परम् ।। 2 ।। ||76||

## 77. वाते मधुयष्टितैलम्

मधुयष्ट्या पलशतं कषाये पादशेषितम् ।
तैलाढकं समं क्षीरं पचेत्कल्कं फलान्वितैः ।। 1 ।।

स्थिरातामलकि मूर्वा यस्योशिरचन्दनैः ।
लोहं हंसपदिमांसिद्धिमेधामधुयष्टिका ।। 2 ।।

काकोळीक्षीरकाकोळि शतपुष्पार्धपावकैः ।
जीवन्तिजीवर्षभत्वक्पत्रनखवालुकैः ।। 3 ।।

प्रपौण्डरीकमञ्जिष्ठाशारिबे द्वे वितुंन्नकम् ।
चतःप्रयोगं वातासृक् पित्तदाहज्वरार्तिनुत् ।। 4 ।। ||77||

## 78. वाते सृगे क्षुद्रपर्णितैलम्

शुष्कं क्षुण्णं क्षुद्रपर्णिं मूलं शतफलं भवेत् ।
सर्वं त्रिंशत् पलं चैव चतुर्द्रोणे जले पचेत् ।। 1 ।।

चतुर्भागावशेषन्तु कषायमवतारयेत् ।
तैलाढकं समायुक्तं तैलस्य द्विगुणं पयः ।। 2 ।।

अत्र कल्कानिमान् दद्यात् हिमं सरळदारु च ।
त्वगेलापत्रमांसिं च उत्पलं मधुकं तथा ।। 3 ।।

तासृदा त्रिफलागरुपद्मकम् ।
ह्रिवेरं शारिबा रास्ना शताह्वां च द्विजीरकम् ।
मञ्जिष्ठामृगनाभिश्च वाजिगन्धा हरेणवः ।। 4 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

एतानि समभागानि करपातान्विपाचयेत् ।
अश्विभ्यां निर्मितं श्रेष्ठं लेपमात्राद्विनश्यति ।। 5 ।।
वाता सृग्वातरोगांश्च महावीर्यमनुत्तमम् ।
अङ्गदाहं स शोषं च नाशयेन्नात्र संशयः ।। 6 ।।
उत्थानलेपनाभ्यङ्गपरिषेकावगाहनैः ।
यतेत स्थापनं स्नेहपानैर्गम्भीरमाचयेत् ।। 7 ।। ||78||

## 79. शिरोव्रणे कुण्डल्यादितैलम्

कुण्डलिभृङ्गराजार्क चेन्द्राणि चिञ्चसर्षपाः ।
एरण्डकटुशुण्ठिबीजसामलक्यार्धचन्द्रिका ।। 1 ।।
एतेषां वरपत्राणि अमृतारजनीरसम् ।
केतक्यास्वरसं चैव प्रत्येकं कुडुबद्वयम् ।। 2 ।।
सिद्धार्थपथ्यारजनि विळङ्गनिम्बबेम्बड ।
वाकूचिचक्रमर्धश्च प्रत्येकं तु द्विनिष्ककम् ।। 3 ।।
तिलतैलं द्विकुडुबं प्रस्थं गोक्षीरसंयुतम् ।
सुसिद्धतैलमभ्यङ्गशिरोव्रणनिवारणम् ।। 4 ।। ||79||

## 80. व्रणे रविभक्ततैलम्

रविभक्तसमूलस्य रसस्य पयसः समम् ।
सुसिद्धतैलमभ्यङ्गात् शिरोव्रणनिवारणम् ।। 5 ।। ||80||

## 81. बलाधात्रितैलम्

एकभागो बलाधात्र्यैर्गूळूच्यास्तु तदर्धकम् ।
तदर्धं हिरिवेरं च तदर्धं जलमूलकम्(मुडिवाळकम्) ।। 1 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

तदर्धं चन्दनं यष्टिप्रसूनं वकुलस्य च ।
द्रोणेऽपि विपचेत्सम्यक् चतुर्भागावशेषिते ।। 2 ।।
कषाये निक्षिपेत्तत्र गोक्षीरस्याढकद्वयम् ।
तैलप्रस्थं शतावर्या रसप्रस्थञ्च दापयेत् ।। 3 ।।
भृङ्गामळकतुङ्गद्रु केतकीनां पृथग्रसम् ।
प्रस्थं प्रस्थं क्षिपेत्तत्र कल्कैरेतैः सुपेषितैः ।। 4 ।।
चन्दनद्वितयं मांसि चातुर्जातं फलत्रयम् ।
शशिबाह्लीककस्तूरीवालं ह्रीवेरमुत्पलम् ।। 5 ।।
मृणाळबिसमब्जं च तण्डुलीयं सपद्मकम् ।
कटङ्कटिकुष्ठदार्वी ऋष्यमानिकरोहिणि ।। 6 ।।
तगरं दारुमञ्जिष्ठाधातकी चरसाञ्जनम् ।
जतुकाचाश्वगन्धा च नळेकां नलमूलकम् ।। 7 ।।
वटप्ररोहं स्थौणेयं रेणुकं चाष्टवर्गकम् ।
पचेत्तैलं विशेषेण सुपक्वं मतिमान् भिषक् ।। 8 ।।
मूर्ध्नतैलमिदं श्रेष्ठं वातपित्तोत्तरे गदे ।
चक्षुष्यं बालवृद्धानां तुष्टिपुष्टिबलप्रदम् ।। 9 ।।
अङ्गदाहे शिरोरोगे नेत्रदाहे प्रशस्यते ।
अक्ष्णोस्तैमिर्यरोमांशरेचने मूर्ध्निशोषिणे ।। 10 ।।
केशोद्धरणसम्बाधे तनुर्विस्फोटचेद्गमे ।
बलाधात्र्यादिकं तैलं शिरोरोगेषु शस्यते ।। 11 ।। ॥81॥

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 82. काकजङ्घादितैलम्

य काकजङ्घाह्वयभृङ्गराज
धात्रीविभीते स्वरसेषु सिद्धम् ।
तैलं शिरोरुक्षुभिषग्भिराप्तै-
रुक्तं कुलोत्तङ्गसमाख्यमेतत् ।। 1 ।। ||82||

## 83. शिग्रुतैलम्

शिग्रुमयूरकबीजैर्निमिस्वरसे शृतेन तैलेन ।
नस्याद्धन्ति शिरस्योनस्य चिरकालरुढ्वापि ।। 1 ।। ||83||

## 84. धात्रिगुळूचितैलम्

क्वाथे धात्रिगुळूच्योः स
मधुक बला शारिबोशीरपद्मैः ।
काकोल्यादि त्रिजातागरु
सरळमधुकोत्पलाम्भोवरिभिः ।। 1 ।।
श्रेष्ठा कर्कोलजाति तगर-
मृगमदैश्चन्दनाब्देन्दुचोरैस्तैः ।
पक्वं सुदुग्धं शमयति
नितरां शिरोगजालं शिरोक्षैः ।। 2 ।। ||84||

## 85. गुळूचितैलम्

गुळूच्या एकभागस्य तदर्धं चन्दनं भवेत् ।
उशिरं च तदर्धं स्यात्तदर्धं हिरिवेरकम् ।। 1 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

जलद्रोणे विपक्तव्यं चतुर्भागावशेषितम् ।
तत्कषायं परिस्राव्य तैलप्रस्थं विपाचयेत् ।। 2 ।।
तैलस्य द्विगुणं क्षीरं रसमामलकस्य च ।
अत्र कल्कं प्रवक्ष्यामि मधुकं चन्दनं वरा ।। 3 ।।
कुष्ठशतावरी चाश्वगन्धा गुग्गुलुकं तथा ।
शारिबा च बला रास्ना कान्तिपत्रं घनं जटा ।। 4 ।।
नयनं केशरोगघ्नमात्रेयेण सपूजितम् ।। 5 ।। ||85||

## 86. शिरोरोगनाशने बलाधात्र्यादितैलम्

एकभागा बलाधात्र्यार्गुडूच्यास्तु तदर्धकम् ।
उशीरस्य तदर्धं स्यात्तदर्धं हिरिवेरकम् ।। 1 ।।
तदर्धं चन्दनं यष्टि प्रसूनं वकुळस्य च ।
द्रोणेषां विपचेत्सम्यक्चतुर्भागावशेषितम् ।। 2 ।।
अत्र कल्कं प्रदातव्यं मधुकं चन्दनद्वयम् ।
कुष्ठमुत्पलमब्जञ्च शारिबा च त्रिजातकम् ।। 3 ।।
जातीफलं च कर्कोलं कर्पूरं च शतावरी ।
जीवकर्षभकौमेधे मृद्वीकं कुङ्कुमं तथा ।। 4 ।।
लामज्जकं च शालूकं चोरकद्वयपुष्करम् ।
नागपुष्पं नतं स्पृक्का मञ्जिष्ठा कटुरोहिणी ।। 5 ।।
अञ्जनं सरळं दारु कुङ्कुमं मृगनाभिकम् ।
मधुकरपुष्पं त्रिफला फलिनी मिसि ।। 6 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

मुस्तागुरुस्तथा मांसि तगरं पद्मकेसरम् ।
कषायस्य समं क्षीरं रसमामलकं तथा ।। 7 ।।

दत्वा दत्वा शतावर्यास्तैलप्रस्थं विपाचयेत् ।
एतत्तैलं निहन्त्याशु पानाभ्यञ्जननावनैः ।। 8 ।।

शिरोनेत्रगतान्रोगानन्यात् पित्तानिलोद्भवान् ।
अङ्गदाहे शिरोदाहे नेत्रदाहे प्रशस्यते ।। 9 ।।

क्षतक्षयहरं वृष्यं रक्तमांसबलप्रदम् ।
ऊर्ध्वजत्रूगतान्रोगान्विशेषेण शमं नयेत् ।। 10 ।।

नवेजंनोत्तरे जाते योजयेदपशीर्षकि ।
वातव्याधिक्रियापक्वे कर्मविद्रृदिचोदितम् ।। 11 ।।

आमपक्वे यथा योग्यं विद्रृदौ पिटकार्बुदे ।। 12 ।। ||86||

## 87. मण्डे तिमिरके लिकुचतैलम्

लिकुच स्वरसे तैलं पचेऽश्मरी च कारवी ।
कल्ककृत्य तदभ्यङ्गात्केश्यमुर्वाककण्डहृत् ।। 1 ।। ||87||

## 88. दुत्तूरतैलम्

दुत्तूरकस्य स्वरसे तद्बीजैस्तीक्ष्णकल्कतैः ।
पक्वं तैलं निहन्त्याशु कण्डू केश्यं रती नृणाम् ।। 1 ।। ||88||

## 89. कुण्डूमितैलम्

कुण्डूमिफलसारेण बहुशः [पल]भावितम् ।
अङ्कोलबीजमरीचकुष्ठचूर्णं ततः पुनः ।। 1 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

तैलेन मिश्रितं धान्यैः स्थापयेत्सप्तवासरम् ।
तत्परं केशकण्डूं नाशनं केशरोहणम् ।। 2 ।। ॥89॥

## 90. चिञ्चादितैलम्

चिञ्चार्कलर्कनिमिचसुक-
कुरुटकाकेतकि चन्द्रवल्ली ।
विराचिमूकभृङ्गामृतहपुष-
निशाकुण्डमिचापि तेषाम् ।। 1 ।।

तैलं सिद्धरसेषु त्रिकटु-
करजनिस्तेजनिसोमराजि ।
पथ्या सिद्धार्थकैस्तत् प्रणुदति
शिरसो रोगजालातिकेश्यम् ।। 2 ।। ॥90॥

## 91. मञ्जिष्ठादितैलम्

मञ्जिष्ठा पद्मकं कुष्ठं चन्दनं गैरिकं बला ।
हरिद्रे द्वे प्रियङ्गुं च नागयष्टिं सवाकुचम् ।। 1 ।।

दारुप्रपौण्डरीकं च पिष्ट्वा तु श्रपितानि तु ।
तैलप्रस्थं गवाक्षीरं दत्वा क्वाथं तदासनात् ।। 2 ।।

चतुर्गुणं भृङ्गरसं शनैर्मृद्वग्निना पचेत् ।
अस्य तैलस्य पक्वस्य श्रुणु वीर्यमतः परम् ।। 3 ।।

केशशाते शिरोरोगे मन्यस्तम्भे हनुग्रहे ।
कर्णदन्ताक्षिशूली च नश्येऽभ्यङ्गे च योजयेत् ।। 4 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

सुकुञ्चिकाग्रान् केशांश्च स्निग्धान् रञ्जनयेद्बहून् ।
पमिते चद्रलुप्ते च तैलमेतत्प्रशस्यते ।। 5 ।।
मञ्जिष्ठाद्यमिदं नामा शिरोरोगनिवारणम् ।। 6 ।। ॥91॥

## 92. नस्ये प्रपौण्ड्रकादितैलम्

प्रपौण्डरीकयष्ट्यांह्वा पिप्पलुत्पलचन्दनैः ।
धात्र्यम्बुसाधितं तैलं नावनात् श्रपितानि चेत् ।।1।। ॥92॥

## 93. नीलाञ्जनादितैलम्

समामास्थायशश्चूर्णं तत्समं त्रैफलं रजः ।
स्तोकं नीलाञ्जनं चूर्णं येतच्चूर्णं चतुष्टयम् ।। 1 ।।
षड्गुणेन कषायेण त्रिफलाय विलोळितम् ।
द्विगुणेन तु तैलेन लोहपात्रे विमर्दितम् ।। 2 ।।
ततो निधापयेत् धान्यराशौ मासचतुष्टयम् ।
तत्करोति बलाकाभान् केशान्नीलाञ्जनोपमान् ।। 3 ।। ॥93॥

## 94. केशवाते श्लेष्मातकतैलम्

बीजैः श्लेष्मातकस्य व्यपगवातकुष्ठैः
काम्लकश्लक्षणपिष्टैः यंलिप्ता लोहदण्डा-
दिनकरकिरणैस्तापितात्प्रच्यवन्ती तत्तैलं
केशकाष्र्यं जनयति परमं नावनाभ्यञ्जनाभ्याम् ।
मूर्ध्नघ्राणाङ्घ्रि दन्तश्रवणगलरुजां हन्ति निःशेषतश्च ।। 1 ।।
॥94॥

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## 95. पूतिकातैलम्

पूतिकस्य रसाढके तिलभवं कल्कैर्बला शारिबा
रास्ना हिङ्ग्वभयाविळङ्गरजनि देवाह्वशैलेयकम् ।
शैलोग्राह्वयगन्धमांसिमधुकश्यो नाकमेधामहि
स क्षीरं परिपक्वमेतदनिलं सध्योजयेदर्धितम् ।। 1 ।। ॥95॥

## 96. वाते पञ्चार्कतैलम्

मूलैः सपत्रै हि फलपुष्पकाण्डै-
श्शाकस्यनिष्पीड्य रसाढकं वा ।
शुष्कस्य वातस्य तु शोधकेन
सिद्धस्य हार्यः क्वथिताढकं वा ।। 1 ।।

भूपीलुकवह्निपुनर्नवानां
तुरङ्ग गन्धार्कगलस्य मूलम् ।
निर्गुण्डिकायाश्च तथैव शिग्रु
मूलानि विन्ध्यात्पृथगाददेत ।। 2 ।।

एलालवङ्गतगरं सकुष्ठं
ससैन्धवं सर्षपचोरकं च ।
चतुर्दशैतान्निजकर्षकाणि
क्षीरेण पिष्ट्वा पयोर्धकंसे ।। 3 ।।

प्रस्थं तु तैलस्य पचेत्तत्र
पञ्चार्कतैलं प्रवदन्ति तद्रे ।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

श्रोणिगतान्सन्धिगतांश्च वाता-
न्निहन्ति वाता सृगदार्दितं च ।। 4 ।।
अभ्यंजनैस्त्रैस्त्रिभिरेव सद्यो
निहन्ति वाताश्शिरजानशेषम् ।। 5 ।। ॥96॥

## 97. निर्गुण्ड्यादितैलम्

निर्गुण्डिका वैजयन्ति सोमस्नुह्यार्कजैः रसैः ।
सर्वैरितैश्चतुर्भागैस्त्रिभिर्द्वाभ्यां पृथक्फलम् ।। 1 ।।
तैलं पचेद्दारुविश्वघनभूसर्षपैरिदम् ।
अशीतिवातजान्रोगान् कृच्छ्रानपि निहन्ति तत् ।।2।। ॥97॥

## 98. स्नुह्यर्कादितैलम्

स्नुह्यर्का स्वरसे पुनर्नवावचाबिल्वाग्निशिग्रूत्तमैः
सिद्धं तैलमशेषमारुतहरं तद्वद्रसे चार्कजे ।
चोलैलामयराजिवक्रसरळत्वग्भिस्तु तद्वद्वला
क्वाथेदिन्दुबलासुराह्वयजटारास्नाह्वसिद्धार्थकैः ।। 1 ।। ॥98॥

## 99. प्रसारणीतैलम्

प्रसारणी रसे सिद्धं तैलमेरण्डनागरम् ।
यथा बलं सर्ववातान् कफरोगान्विनाशयेत् ।। 1 ।। ॥99॥

## 100. यष्ट्यादितैलम्

यष्टिकुङ्कुमचव्यदारुसरळा श्रेष्ठा त्रिजातागरु
श्रीखण्डाग्निपुनर्नवा द्विरजनि सिन्धूत्थमांसिकणैः ।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

शुण्ठिग्रन्थिमधूकरोचकवचा सेव्याम्बुरास्नावरी
मञ्जिष्ठामिशिशाकवेणुतगरा स्पृक्काष्टवर्गामयैः ।। 1 ।।
संपक्वं तिलजं च[तु]र्गुणपयस्तद्वाजिगन्धोदके ।
पानाद्यैर्बलवर्णशुक्रमतिकृत् सर्वानिलव्याधिजित् ।। 2 ।।
शोषश्वासगराग्निसादगुदजत्वद्दोषयोन्यापदो हन्या-
द्गर्भहितं च गर्भजननं शुक्रार्तिवार्तिं जयेत् ।। 3 ।। ॥100॥

## 101. जिह्वामये निर्गुण्डितैलम्

निर्गुण्डिमरीचिभृङ्गजातीनां च रसाढके ।
तैलप्रस्थं पचेद्धीमान् कल्कैरेतैश्च कार्षिकैः ।। 1 ।।
कणाभार्जावचाशिग्रु सितसर्षपनागरैः ।
हिङ्गुपाठाग्निमन्दैश्च शौण्डसैन्धवकुङ्कुमैः ।। 2 ।।
हन्ति जिह्वामयान् सर्वान् विशेषादुपजिह्वकान् ।
नासामुखगतान् रोगान् तैलमेतद्व्यपोहति ।। 3 ।। ॥101॥

## 102. ज्वरे कौन्त्यादितैलम्

कौन्तिमूर्वामिशिवचानिशादारुरास्नाश्वगन्धा
मुस्ताकुष्ठप्रवरकटुका मूलजैस्तुल्यभागैः ।
तैलप्रस्थं जतुरससमं मस्तकंसेविपक्वं
अभ्यङ्गेन क्षयकसनजित् सर्वभूतज्वरघ्नम् ।। 1 ।। ॥102॥

## 103. ज्वरादौ सहदेवीतैलम्

सहदेवी समूलस्य तुलां संक्षुद्यभाजने ।
जलद्रोणे विपक्तव्यं चतुर्भागावशेषिते ।। 1 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

तैलप्रस्थं जतुरसं प्रस्थमस्तु समन्वितम् ।
मधुकं चन्दनं मांसि रोहिण्यादधिफेनकम् ।। 2 ।।
नागरं पिप्पलिरास्नालाक्षामञ्जिष्ठकं तृटि ।
मुस्तापुष्करमूलं च दार्विमूर्वासुरद्रुमम् ।। 3 ।।
शारिबा वाजिगन्धा च बला सेव्यमुदीच्यकम् ।
निशि निशाचरं चोर सैन्धवं चोरतिक्तकम् ।। 4 ।।
अजाजि चोपकाळी च कौन्तिकर्कोलकारिकैः ।
एतत् कल्कं समालोड्य शनैर्मृद्वग्निना पचेत् ।। 5 ।।
एतत्तैलं महावीर्यं क्षणे दाहज्वरं हरेत् ।
सततज्वरसन्तापहरं शीतज्वरापहम् ।। 6 ।।
क्षयमेकादशं हन्यात्सर्वज्वरमुरान्तकः ।। 7 ।। ||103||

## 104. बलापुनर्नवादितैलम्

बला पुनर्नवा पीलु बहुत्वग्मूलचित्रकम् ।
प्रसारणीरविनिशाकोरण्टैरण्डपूतिकम् ।। 1 ।।
वरणं वज्रवृक्षं च मोरटं नक्तमूलकम् ।
तेषां पलशतं क्षुण्णं कुम्भद्विगुणमम्भसि ।। 2 ।।
तीक्ष्णाढकं जलद्रोणे पचेत् पादावशेषिते ।
अत्र भागावशिष्टं तु तैलपात्रं निधापयेत् ।। 3 ।।
अजापयः शुभयुतं प्रस्थार्धं चार्कदुग्धकम् ।
भारद्वाज च निर्गुण्डिजयन्तीर्वारुरसम् ।। 4 ।।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

